बि० टे० बु० क० द्वारा स्वीकृत १९७१

# राष्ट्रिय-संस्कृत पाठः

( षष्ठवर्गस्य कृते )

नाम उमा कुमारी श्री छठा
विषय राष्ट्रिय-संस्कृत पाठ

लेखक
पं० कौशलकिशोर त्रिपाठी
काव्यतीर्थ, बी० ए० ( हिन्दी ), विशारद
साहित्यालंकार डीप० इन-एड०
शिक्षक, सर गणेशदत्त पाटलिपुत्र हाई स्कूल
कदमकुआँ, पटना—३




प्रकाशक
संस्कृत पुस्तक एजेन्सी
नयाटोला, पटना—४
दिसम्बर १९७०
मूल्य ५० पैसे



## प्रस्तावना

प्रस्तुत पुस्तक षष्ठ वर्ग के छात्रों के लिए लिखी गई संस्कृत पाठ्य-पुस्तक है। सरकार द्वारा एतत्सम्बन्धी आवश्यक निर्देशों के आधार पर नवीन पाठ्य-क्रम के अनुरूप ही यह पुस्तक प्रस्तुत की गई है। इसमें ऐसे शब्दों के प्रयोग का विशेष ध्यान रखा गया है, जो हिन्दी में संस्कृत के तत्सम रूप में व्यवहृत हैं। फलतः यह पुस्तक संस्कृत-भाषा-साहित्य में प्रवेश के इच्छुक कोमलमति बालकों के लिए समुचित मार्ग-प्रदर्शन करेगी। प्रत्येक पाठ के अन्त में ऐसे सरल प्रश्न रखे गए हैं, जो पाठ की आवृत्ति कराने के साथ ही संस्कृत वाक्य-योजना से परिचित करते तथा उस ओर छात्रों को प्रवृत्त कराते हैं।

पाठक्रम में सरकार द्वारा षष्ठ वर्ग के लिए निर्धारित पाठ्य-विषय तथा पाठ्यक्रम का अक्षरशः पालन किया गया है। आशा है, यह पुस्तक अपने क्षेत्र में उपयोगी सिद्ध होगी।

—लेखक

# विषय-सूची


| विषयाः | पृष्ठाङ्काः |
|---|---|
| १ प्रथमः पाठः प्रार्थना | १ |
| २ द्वितीय पाठः वार्तालापः | ३ |
| ३ तृतीयः पाठः प्रातःकालः | ५ |
| ४ चतुर्थः पाठः वीरशिरोमणिः द्रोणः | ६ |
| ५ पञ्चमः पाठः उपदेशामृतम् | ८ |
| ६ षष्ठः पाठः कूर्म-शशक-कथा | ९ |
| ७ सप्तमः पाठः गुरुभक्त आरुणिः | ११ |
| ८ अष्टमः पाठः भरतस्य भ्रातृभक्ति | १४ |
| ९ नवमः पाठः सायंकालः | १६ |
| १० दशमः पाठः काशी हिन्दू-विश्वविद्यालयः | १७ |
| ११ एकादशः पाठः सुभाषितानि | १९ |
| १२ द्वादशः पाठः लोकमान्य तिलकः | २१ |
| १३ त्रयोदशः पाठः विडालमर्कट कथा | २३ |
| १४ चतुर्दशः पाठः कार्पासकम् | २५ |




| विषयाः | पृष्ठाङ्काः |
|---|---|
| १५ पञ्चदशः पाठः व्यायामः | २७ |
| १६ षोडशः पाठः रामराज्यम् | २९ |
| १७ सप्तदशः पाठः नीतिश्लोकाः | ३१ |
| १८ अष्टादशः पाठः वीरबालकः भरतः | ३२ |
| १९ ऊनविंशः पाठः विद्यामहिमा | ३५ |
| २० विंशः पाठः गणेशस्य मोदकप्राप्ति | ३७ |
| २१ एकविंशः पाठः कृषिः | ३९ |
| २२ द्वाविंशः पाठः प्रार्थना | ४२ |

---

# प्रथमः पाठः

## प्रार्थना

त्वमादिदेवः पुरुषः पुराणः
त्वमस्य विश्वस्य परं निधानम् ॥




वेत्तासि वेद्यं च परं च धाम

त्वयाततं विश्वमनन्तरूप ॥१॥

वायुर्यमोऽग्निः वरुणः शशाङ्कः

प्रजापतिस्त्वं प्रपितामहश्च ॥

नमो नमस्तेऽस्तु सहस्र कृत्वः

पुनश्च भूयोऽपि नमो नमस्ते ॥२॥

त्वमेव माता च पिता त्वमेव

त्वमेव बन्धुश्च सखा त्वमेव ॥

त्वमेव विद्या द्रविणं त्वमेव

त्वमेव सर्वं मम देव देव ॥३ ॥

—:०:—

# द्वितीयः पाठः

## वार्त्तालापः

( रामः कक्षे पुस्तकं पठति अकस्मात् श्यामः तत्रागतः )

रामः—अहो ! अहोभाग्यम् ! श्यामः समागतः । नमस्ते मित्र, स्वागतं ते ।

श्यामः—नमस्ते नमस्ते । अनुगृहीतः स्वागतेन ।



अधुना त्वम् किं करोषि ? आगच्छ भ्रमणाय गच्छावः ।

रामः—अहमधुना संस्कृतपाठ्यपुस्तकं पठामि ।

तत्र अनेकानि मनोरञ्जकानि कथानकानि सन्ति । अनेकाः शिक्षाप्रदाः श्लोकाश्च वर्तन्ते ।

श्यामः—आम्, जानामि । संस्कृतभाषा अतीव मधुरा ज्ञानपूर्णा च अस्ति । अतएव सर्वैरेव संस्कृतम् पठनीयम् ।

राम—श्रूयते संस्कृते महान्तः ग्रन्थाः सन्ति । संस्कृतकाव्यानि च अतीव मनोहराणि सन्ति ।

श्यामः—सत्यं वदसि । नात्र संशयः । संस्कृते अनेकानि ग्रन्थरत्नानि सन्ति । पुराणाः, स्मृतयः, उपनिषदः, काव्यानि, कथाः, नाटकानि, सर्वाणि एव जनहितकराणि मनोहराणि च ।

रामः—तर्हि परिश्रमेणाहं संस्कृतं पठिष्यामि ।

श्यामः—उचितमेवैतत् । संस्कृतमेव सर्वासामार्य-भाषाणां मूलम् । संस्कृतमेव भारतीयसंस्कृतेः संरक्षकम् । संस्कृत पठनमावश्यकम् अस्माकं भारतीयानाम् ।

रामः—संध्याकालः समागतः । गच्छावः भ्रमणाय । भ्रमणानन्तरमागत्य पुनः संस्कृतं पठिष्यामि ।

प्रश्न :—रामः किं करोति ? संस्कृतं कस्य रक्षकम् ? संस्कृतभाषा कीदृशी अस्ति ?

# तृतीयः पाठः

## प्रातःकालः

अयं प्रातः कालः। पश्य चित्रे प्रातः कालस्य मनोहरः दृश्यः वर्तते।

पूर्वाकाशे सूर्यः उदति। सर्वत्र प्रकाशः वर्तते। खगाः कलरवं कुर्वन्ति। सर्वे जनाः निद्रां विहाय



समुत्थिताः। वने वृक्षाः लताश्च प्रमुदिताः सन्ति। सरोवरेषु कमलानि विकसितानि सन्ति। ब्रह्मचारिणः

नद्यां स्नानं कुर्वन्ति। केचित् स्नात्वा संध्यां कुर्वन्ति गायत्रीमंत्रं च जपन्ति। धार्मिकाः जनाः देवपुजनं कुर्वन्ति। कर्म्मचारिणः कार्यालयाय प्रस्तुताः भवन्ति। छात्राः प्रातराशं कृत्वा पुस्तकं पठन्ति। गावः क्षेत्रे चरन्ति। सर्वेषु आपणेषु आपणिकाः वस्तूनि क्रीणन्ति विक्रीणन्ति च। हट्टेषु महान् जनरवः भवति। सर्वेजनाः निजेषु कार्येषु संलग्नाः भवन्ति।

प्रश्नः—ब्रह्मचारिणः किं कुर्वन्ति ? छात्राः किं कुर्वन्ति ? सूर्यः कुत्र उदेति ?
हट्टेषु किं भवति ?
आपणिकाः किं कुर्वन्ति ?

---

# चतुर्थः पाठः

## वीरशिरोमणिः द्रोणः

जगत्प्रसिद्धं कुरू कुलम् तस्य वीरतामयीः कथाश्च कः न जानाति। कौरवपाण्डवानाम् गुरुः द्रोणोऽपि तथैव विश्रुतः।

एकदा कौरवाः पाण्डवाश्च बालकाः कन्दुक क्रीडने संलग्नाः आसन् । ते सर्वेऽपि आनन्दोत्साहसमन्विताः आसन् । अकस्मात् कन्दुकम् उत्पत्य निकटस्थे कूपे



अपतत् । बालकाः परं विपण्णाः अभवन् । कूपात् कन्दुकमानेतुं कोऽपि तत्र सक्षमः नासीत् ।

अत्रान्तरे तत्रैकः महात्मा धनुर्धरः समायातः । आगतमात्र एव बालकान् अतोषयत् अवदत् च—मा विषादं कुरूथ । अहम् कन्दुकमेतत् कूपात् उद्धरिष्यामि । एतदुक्त्वा स बाणेन कन्दुकम् कूपात् न्यष्कासयत् । सर्वेऽपि बालकाः चकिताः अभवत् । अयमेव महात्मा पश्चात् कौरवपाण्डवानाम् गुरुः द्रोणाचार्य इति प्रसिद्धः अभवत् ।

प्रश्न :—सः धनुर्धरः किम् अवदत्
द्रोणः कः आसीत् ?
द्रोणः किं कृतवान् ?

—:०:—

# पञ्चमः पाठः

## उपदेशामृतम्

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ॥
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥१॥
नमन्ति फलिनो वृक्षाः नमन्ति गुणिनो जनाः ॥
शुष्ककाष्ठानि मूर्खाश्च न नमन्ति कदाचन ॥२॥
उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे ॥
राजद्वारे श्मशाने च यः तिष्ठति स बान्धवः ॥३॥
परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ॥
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥४॥
अग्निशेषः शत्रुशेषः ऋणशेषः तथैव च ॥
पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न रक्षयेत् ॥५॥
यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ॥
ध्रुवाणितस्य नश्यन्ति अध्रुवंनष्टमेवहि ॥६॥

# षष्ठः पाठः

## कूर्म-शशक-कथा

आसीत् पुरा कस्मिंश्चित् वनैकदेशे अतिरमणीयः सरोवरः। तत्र एकः कूर्मः प्रतिवसतिस्म। तत्रैव एकः शशकश्च निवसतिस्म। द्वयोः दृढ़ामैत्री आसीत्। एकदा



तयोः विवादः अभवत् यत् कः तयोः तीव्रगतिः। विवादस्य निर्णयार्थं तौ एकमुपायं विचारितवन्तौ। शशकः आह—मित्र, आवां सहैव स्थले निर्दिष्टस्थानं

यावत् चलेव। यः प्रथमं तत् स्थानं प्राप्स्यति स एव विजयी भविष्यति। कूर्मेणापि सर्वमेतत् स्वीकृतम्।

ततः कूर्मः शशकश्च निश्चित समये अधावताम्। स्वभावतः शीघ्रगामी शशकः कियत् दूरं गतः। कूर्मस्तु



पश्चादेव स्थितः। ततः शशकेन विचारितम्। अहं क्षणेनैव एतावद्दूरं प्राप्तः। क्षणं विश्रम्य पुनः गमिष्यामि। ऐवं विचार्य शशकः विश्रामाय स्थितः क्षणेनैव सुप्तश्च। कूर्मस्तु मन्दं मन्दं गच्छतिस्म। यदा निद्रां त्यक्त्वा शशकः तीव्रमत्या निश्चितस्थानं प्राप्तः

तदा कूर्मं पूर्वमेव तत्र प्राप्तं दृष्ट्वा चकितः लज्जितश्च अभवत् ।

अत्रेयं नीतिः—

परिश्रमी निरालस्यः मन्दोऽपि लभते फलम् ।

प्रश्न :—शशकः कथं लज्जितः अभवत् ?

शशकः किमाह ? तयोः कः विवादः अभवत् ? कः विजयी भविष्यति ?

# सप्तमः पाठः

## गुरुभक्त आरुणिः

कस्मिंश्चित् विद्यालये एकः सुशीलः छात्रः पठतिस्म । पठने परिश्रमी स बालकः अतीव गुरुभक्तश्चासीत् । स सदा गुरोराज्ञां सादरं पालयतिस्म । गुरुश्च तस्मिन् अत्यर्थं प्रीतिमानासीत् ।

एकदा वर्षाकाले अतीव वृष्टिः अभवत् । कृषि-क्षेत्रानाम् केदाराः भग्नाः अभवन् जलं च क्षेत्रेभ्यः वहियाति । गुरुः आरुणिम् स्वक्षेत्रात् प्रवहतः जलस्य

निरोधार्थं प्रेषया मास । आरुणिः तत्र गत्वा तस्य प्रवाहस्य निरोधार्थमत्यन्तं प्रयत्नं कृतवान् किन्तु जलवेगः नैव निरुद्धः अभवत् । निरुपायः आरुणिः तत्रैव भग्ने केदार-बन्धे दण्डायमानः स्थितः । एवं प्रकारेण जलनिरोधः अभवत् ।

जलप्रवाहभयात् स नैव समुत्तिष्ठति । गुरुश्च संध्याकालेऽपि आरुणि निवर्तितं नावलोक्य तमन्विष्यन्



कृषिक्षेत्रं प्राप्तः । तत्र आरुणि लम्बितं दृष्ट्वा सविस्मयः साश्रुलोचनश्च अभवत् । उवाच च-धन्योऽसि आरुणे !

उत्तिष्ठ वीर, विजयी भव । तवैषा गुरुभक्ति-कथा-सर्वदैव स्मरणीया स्थास्यति । भो बालकाः ! यूयमपि आरुणि सदृशाः गुरोराज्ञापालनतत्पराः भवत ।

प्रश्न :—गुरुः आरुणिं कथं प्रेषयामास ? आरुणिः किं कृतवान् ? गुरुः किमुवाच ?

(ख) रिक्तस्थानानि पूरय :—

गुरुः तमन्विष्यन्——प्राप्तः ।

जलवेगः——अभवत् ।

जलञ्च————याति ।



# अष्टमः पाठः

## भरतस्य भ्रातृभक्तिः

भो भो छात्राः । यूयं पश्यथ यत् अद्य सर्वोऽपि जन्तुः स्वार्थपरायणः । नैकोऽपि जनः प्राप्तधनं विहातुम् समर्थः । किन्तु पुरा अस्माकं देशे ईदृशाः महान्तः जनाः अभवन् ये प्राप्तमपि राज्यं त्यक्त्वातीव सुखमनुभवन्तिस्म । भ्रातृभक्तेः महत्तमः आदर्शः महामतिः



भरतः ईदृश एवैकः महापुरुष आसीत् । तस्यादर्शचरितम् रामायणे वर्तते ।

भ्रातृभक्तः भरतः दाशरथिः रामस्य अनुजः आसीत् । यदारामः पितुराज्ञया सीतया लक्ष्मणेन च

सह वनमगच्छत् तदा भरतः मातुलगृहे एवासीत् । अयोध्यामागत्य स रामवनगमनवृत्तान्तं श्रुत्वातीव व्याकुलः अभवत्। शीघ्रमेव स रामम् परावर्तयितुम् वनं प्रस्थितः। तेन सह सर्वेऽपि रामानुरागिणः जनाः वनं प्राप्ताः। चित्रकूटेऽभवत् रामभरतमिलनम् ।

तत्र च रामस्य पादयोः निपत्य भृशं क्रन्दन् भूयोभूयः अयोध्यां चलितुं तं प्रार्थयामास । किन्तु यदा धर्म्मप्राणः वचनबद्धश्च रामः वनवासावधिं यावत् अयोध्यां चलितुं प्रस्तुतः नाभवत् तदापि साश्रुनयनः भरतः बहुविलप्य तस्यपादुकेयाचयामास । प्राप्ते पादुके तत्रैवचित्रकूटे राज्येऽभिषिंच्य अयोध्यां प्रतिनिवृत्तः। तत्र च रामपादुके सिंहासने संस्थाप्य स्वयञ्च नन्दिग्रामे तपश्चर्यालीनः दासवत् राज्यकार्यं चकार । प्रतिक्षारतः स कथं कथमपि चतुर्दश वर्षावधिं समापयामास । आगते च रामे राज्यं तस्मै समर्प्य परं सन्तोषं प्राप्तवान् । एषः भरतः अद्यापि भ्रातृणामादर्शः गण्यते । धन्योऽयं देशः यत्रेदृशाः महात्मानः जाताः

प्रश्नः—वाक्यरचनांकुरुः—

आश्रमः, हन्त, हृदयम्, महात्मानः, अवधिं, निवृत्तः ।

# नवमः पाठः

## सायं कालः

अयं सायंकालः । दिवसः समाप्तः । यावद्दिनं जगत्प्रकाश्य स्व कार्यं समाप्य दिनमणि सूर्यः पश्चिमकाशे अस्तंगतः । आकाशे लालिमा भाति



हरितासु सस्यपंक्तिषु विस्मयकरं लावण्यम् । प्रकृतिरमणीयता हृदयं हरति । विवृद्धः खगानां कल-कलः प्रतिक्षणं नीरवतोन्मुखः । जनाः स्वस्वकार्यं परिहृत्यः

भ्रमणार्थं वायु सेवनार्थम् मनोरञ्जनार्थञ्च बहिर्निःसृताः सुखमनुभवन्ति ।

लौकिककर्मकोलाहलः शान्तप्रायः । गावः गृहं प्रति निवर्तन्ते । सर्वत्र गृहपंक्तिः धूमाच्छन्ना । शनैः शनैः प्रसरति धूमाकुलोऽन्धकारः । छात्राः सायंकाले अध्ययनं त्यक्त्वा क्रीडाक्षेत्रे कन्दुकादिना क्रीडन्ति विविधं व्यायामं च कुर्वन्ति ।

शनैः शनैः आकाशे तारकाः समुदिता । खगाः नीडेषु गच्छन्ति ।

ब्रह्मचारिणः स्नात्वा संध्यामुपासते । सर्वथा प्रशान्तरमणीयः खलुकालः ।

प्रश्न :—छात्राः सायंकाले किं कुर्वन्ति ? सूर्य कुत्र गतः ? ब्रह्मचारिणः किं कुर्वन्ति ?

—:०:—

# दशमः पाठः

## काशी-हिन्दू-विश्वविद्यालयः

भो छात्राः ! यूयम् अधुना विद्यालये पठथ । माध्यमिकपरीक्षामुत्तीर्णाः छात्राः महाविद्यालये

पठन्ति । महाविद्यालयाश्च विश्वविद्यालयस्य अंगीभूताः भवन्ति । सर्वोच्चशिक्षां विश्वविद्यालय एव सम्पादयति ।

भारते अनेकाः विश्वविद्यालयाः सन्ति । तत्रैकः काशी हिन्दू-विश्वविद्यालयः । अस्य विश्वविद्यालयस्य



संस्थापकः महामनाः पण्डित मदनमोहन मालवीय आसीत् । स भारतीय संस्कृतेः अद्वितीय आदर्शः परमश्च देशभक्त आसीत् । स विविधासु भाषासु विविधेषु शास्त्रेषु परमः निष्णातः सरलं जीवनमुच्चः विचार इत्यस्य प्रत्यक्षम् उदाहरणम् आसीत् । अधुना विश्वविद्यालयोऽयं विविधशास्त्रशिक्षणपरीक्षणकुशलः

विशालैः, महाविद्यालयभवनैः रमणीयैः उद्यानैः, सुव्यवस्थितैः छात्रावासैश्च युक्तः परमदर्शनीयः वर्तते, ।

अत्र संस्कृतशिक्षायाः विशिष्टः प्रबन्धः । अत्रैकम् नवनिर्मितम् विश्वनाथस्य शिवस्य मन्दिरम् रमणीयं-दर्शनम् अस्ति ।

प्रश्नः—(क) महाविद्यालये कीदृशाः छात्राः पठन्ति ? काशी विश्वविद्यालयः कीदृशः वर्तते । पं० मदनमोहन मालवीयः कीदृशः आसीत् ? काशीविश्वविद्यालयस्य संस्थापकः कः आसीत् ?

(ख) रिक्तस्थानानि पूरय :—

अत्र—विशिष्टः प्रबन्धः । यूयम—अधुना—पठथ। शिवस्य मन्दिरं—अस्ति ।

—:०:—

# एकादशः पाठः

## सुभाषितानि

धृतिः क्षमादमोऽस्तेयं शौचमिंद्रियनिग्रहः ॥
धीर्विद्या सत्यमक्रोधः दशकं धर्मलक्षणम् ॥१॥
सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम् ॥
प्रियं च नानृतम् ब्रूयात् एष धर्मः सनातनः ॥२॥

नास्ति विद्या समं चक्षुः नास्ति सत्य समं तपः ॥
नास्ति राग समं दुःखं नास्ति त्याग समं तपः ॥३॥
न जटाभिः न गोत्रैः, न जात्या भवति ब्राह्मणः ॥
यस्मिन् सत्यम् च धर्मश्च, स शूचिः स च ब्राह्मणः ॥४॥



अहिंसा परमोधर्मः तथा हिंसा परंतपः ॥
अहिंसा परमं सत्यम् अहिंसा परमं व्रतम ॥५॥
नहि लोभेन सदृशः दुर्गुणः कोऽपि विद्यते ॥
नहि सत्यात् परोधर्मः विद्यया न समं धनम् ॥६॥
सत्यं तीर्थं क्षमातीर्थं तीर्थमिन्द्रियनिग्रहः ॥
सर्वभूतदयातीर्थं सर्वत्रार्जवमेव च ॥७॥

# द्वादशः पाठः

## लोकमान्यः तिलकः

लोकमान्यस्य तिलकस्य सम्पूर्णं नाम बालगंगाधर तिलकः आसीत् । अस्य पितुः नाम गंगाधरपन्तः मातुश्च पार्वती देवी आसीत् । अस्य जन्म १८५६



खृष्टाब्दे महाराष्ट्र प्रदेशस्य रत्नागिरि मण्डलस्य चिखलग्रामे अभूत् । अयं बाल्यावस्थायामेव विलक्षणग्रहणशक्तिसम्पन्नः आसीत् । गणिते संस्कृते च अस्य प्रतिभा परमविकसिता

आसीत् । अयं मातापित्रोः परमभक्त असीत् । न्यायस्य हेतोः कष्टं सोढुं सदैवास्य स्वभाव आसीत् । अस्य स्मरणशक्तिः परमाद्भुता आसीत् । अयं स्वाध्याय-निरतः क्रमेण बी० ए० एल-एल० बी० परीक्षामुत्तीर्णः अभवत् । स राजकीय सेवामस्वीकृत्य स्वतन्त्ररूपेण विद्यालये शिक्षकसेवा स्वीकृतवान् । अनेन केसरीति नाम्ना समाचारपत्रमेकं प्राकाशयत् तस्य सम्पादनम् च अकरोत् । अयं परमः देशभक्तः आसीत् । अनेकवारमयं क्रुद्धेन आंग्लशासकेन कारादण्डं प्रापितः । अनेनैव प्रथम-मुद्घोषितः स्वातन्त्र्यम् अस्माकं जन्मसिद्ध अधिकारः । अतएवायं जनैः लोकमान्य इति ख्यापितः । 'गीता रहस्यम्' अस्य सुप्रसिद्धः दार्शनिक ग्रन्थः । अयम् महात्मा १९२० खृष्टाब्देः लोकलीलां विहाय परमं पदं प्राप्तः ।

प्रश्नः—(क) लोकमान्यतिलकस्य जन्म कदा कुत्र च अभूत् ? अस्यस्मरणशक्तिः कीदृशी आसीत् ? अस्य स्वभाव कीदृश आसीत् ?

(ख) रेखांकित पदानि पूरयः—

अहं परमः———आसीत् ।

अयम् केसरी पत्रिकायाः———अकरोत् ।

स्वातन्त्र्यम्———अधिकारः ।

# त्रयोदशः पाठः

## विडालमर्कट कथा

एकस्मिन् ग्रामे द्वौ विडालौ स्तः। तौ परस्परं मिलित्वा एकस्मात् गृहात् रोटिकाः चोरयित्वा आनयताम्। एकविंशतिः रोटिकाः एवं प्रकारेण संगृहीताः। किन्तु तासाम् समद्विभागः कठिनः अभवत्। तौ द्वौ अपि अधिकामेकां रोटिकां स्वार्थे प्राप्तुं उत्सुकौ



अभवताम्। एवञ्चाभवत् तयोः महान् कलह-कोलाहलः।

एतस्मिन्नेवकाले एकः वानरः समायातः। प्रवृद्ध

कलहे दृष्ट्वा स हस्तक्षेपम् अकरोत् अवदत् च युवाम् कलहं मा कुरुतम्। अहमत्रन्यायं करिष्यामि, समं विभज्य रोटिकाः युवयोः वितरिष्यामि।

ताभ्यामपि स्वीकृतमेतत् वानरश्च कुत्रतोऽपि एकां तुलाम् आनीय समं विभाजयितुं रोटिकाः तोलयितुं आरभत्। यस्मिन् भागे भारः नमति तत्रतः केतिचित् रोटिकाः आदाय स भक्षयति। एवं क्रमेण तेन विंशतिः रोटिकाः खादिताः। एकामवशिष्टां दृष्ट्वा विडालौ अवदताम्—महाशय, कृपां कुरू। नावाम् न्यायं प्रार्थयावहे। अवशिष्टामेव रोटिकां आवाभ्यां देहि। तच्छ्रुत्वा वानरः अवदत्—युवां यथेच्छथः तस्थास्तु। अतः एकामवशिष्टां रोटिकाम् गृहीत्वाहं गच्छामि।

इत्युक्त्वा वानरः तामपि रोटिकां मुखे आदाय निर्गतः।

विडालौ च परस्परं पश्यन्तौ भृशम् अनुतापमनुभवन्तौ च स्थितौ।

प्रश्न :—वाक्यरचनां कुरु :—

भृशम्, प्रवृद्धं, समायातः, विभज्य, तुलाम्, निर्गतः।

# चतुर्दशः पाठः

## कार्पासकम्

भो बालकाः, यूयं सर्वे वस्त्राणि धारयथ। अन्येऽपि



जनाः वस्त्राणि व्यवहरन्ति। भोजनपानानन्तरं वस्त्राणि एव मानवानाम् परमावश्यकानि। तानि च प्रायशः

कार्पासकेनैव निर्मितानि भवन्ति। कृषकाः क्षेत्रे कार्पासकम् उत्पादयन्ति। अस्य वृक्षाः नातिदीर्घकाराः भवन्ति। चैत्रमासे कृषकाः कार्पासकं वपन्ति। कार्पासके षण्मासानन्तरं उज्ज्वलानि कुसुमानि विकसन्ति। तानि



च क्रमशः फलानि भवन्ति। पक्वानि फलानि कतिपयैरेव दिनैः स्फुटन्ति। तत्रैव तूलं प्रकटी भवति। तत् तूलं गृहीत्वा जनाः तर्कुचक्रेण सूत्रं रचयन्ति। तेनैव सूत्र समूहेन वस्त्राणि भवन्ति। तन्तुवायाः वस्त्राणि वपन्ति। एवम् कार्पासकम् अत्यन्तम् उपयोगि वर्तते। अधुना तु

विद्यालयेऽपि वस्त्रनिर्माणस्य शिक्षा भवति। युष्माभिरपि तर्कुलासेन सूत्राणि निर्मातव्यानि। कार्पासकस्य कृषिश्च कर्त्तव्या।

प्रश्न :—रिक्तस्थानानि पूरय :—

यूयं सर्वे....धारयथ।

....वस्त्राणि वपन्ति।

कार्पासकस्य वृक्षाः....भवन्ति।

वस्त्राणि प्रायशः....भवन्ति।

कृषकाः कार्पासकं....।

—:०:—

# पञ्चदशः पाठः

## व्यायामः

सर्वैः मनुष्यैः व्यायामः कर्त्तव्यः। व्यायामात् शरीरं सबलं तथा अङ्गानि सुदृढानि भवन्ति। एतेन जनाः परिश्रमशीलतां सुदृढ़ां कर्मनिष्ठाञ्च लभन्ते। एतत् स्वास्थ्यरक्षायाः मूलमन्त्रम्। अस्माकं देशे व्यायामस्य बहवः प्रकाराः सन्ति। केचित् हस्तौ पादौ च बहुधा सनियमं संचालयन्ति। केचित् धावन्ति केचित् नृत्यन्ति। केचित् दुर्बलाः जनाः भ्रमणमात्रं व्यायामं

कुर्वन्ति । मल्लाः मल्लशालायां मुद्गरं भ्रामयन्ति, शस्त्रसंचालनं च क्रीडन्ति । प्रातः सायं च स्वच्छवायौ नद्याः तटे क्षेत्रे वा भ्रमणं स्वास्थ्यकरः व्यायामः ।



व्यायामस्य उपयोगितां चिकित्साशास्त्राणि अपि स्वीकुर्वन्ति ।

यथा :—

लाघवः कर्मसामर्थ्यं स्थैर्यं क्लेशसहिष्णुता
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ।

प्रश्न :—वाक्यरचनां कुरु :—

लभन्ते, बहुधा, कायः, स्कन्धः, भुजः, बाहुः ।

—:०:—

# षोडशः पाठः

## रामराज्यम्

राष्ट्रपिता महात्मागांधी भारते रामराज्यं स्थापयितुम् इच्छतिस्म । दशरथेः रामस्य कथां कः न जानाति । स पितुराज्ञया चतुर्दशवर्षपर्यन्तं वनवासम-करोत् । सीतापहारकं रावणं हत्वा सीतया लक्ष्मणेन



च सह अयोध्यामागच्छत् । तत्र च सिंहासनारूढ प्रजाः पुत्रवत् अपालयत् । तस्य राज्ये कोऽपि दुःखी, दरिद्रः पीडितश्च नासीत् । तदा प्रजासु कलहः नासीत् तत् राज्यं धनधान्यसमृद्धम् आसीत् । तत्र सुवृष्टिः आसीत् वृक्षाश्च समये पुष्पाणि फलानि च अधारयन् ।

एकेन रजकेन कृतां निन्दम् अनुचरस्य मुखात् श्रुत्वा स सीताम् निरवासयत् । अतएव सः अतीव न्यायप्रियः



प्रसिद्धः । वयमपि वांछामः यत् भारते पुनरपि राम-राज्यम् स्थापितं भवतु ।

प्रश्न :—राष्ट्रपिता किम् इच्छतिस्म ? वयमपि किं वांछामः ? रामः किं कृत्वा अयोध्यामागच्छत् ? रामराज्यम् कीदृशम् आसीत् ? रामः कथं सीता निरवासयत् ?

# सप्तदशः पाठः

## नीतिश्लोकाः

आक्षिपन्त्म सदालुस छिद्यन्तेहि शिरोरुहाः ।
वर्धमानात्मनामेव भवन्ति हि विपत्तयः ॥१॥
उपभोक्तु ं न जानाति श्रियं प्राप्यापि मानवः ॥
आकण्ठजलमग्नोऽपि श्वालिहत्येव जिह्वया ॥२॥

विद्या विवादाय धनं मदाय
शक्तिः परेषां परिपीडनाय ।
खलस्य साधोः विपरीतमेतत्
ज्ञानाय दानाय च रक्षणाय ॥३॥

यस्यास्ति वित्तं स नरः कुलीनः ।
स पण्डितः स श्रुतवान् गुणज्ञः ॥
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥४॥

देशाटनं राजसभाप्रवेशो ।
व्यापारिविद्वज्जनसंगतिश्च ॥
सर्वेषु शास्त्रेष्ववलोकनञ्च ।
चातुर्यमूलानि भवन्ति पञ्च ॥५॥

उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः ॥६॥
विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥७॥
अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥८॥

—:०:—

# अष्टादशः पाठः

## वीरबालकः भरतः



(महामुनेः कश्यपस्य आश्रमः । एकतः एकः

बालकः सिंहशावकं गृहीत्वा आकर्षन्, एका तपस्विनी च तं निवारयति । ततः प्रविशति दुष्यन्तः । )

दुष्यन्तः—असुरवधे इन्द्रस्य सहायतां कृत्वा आकाशमार्गेण स्व नगरीं गच्छन् महर्षेः कश्यपस्य दर्शनाय अवतीर्णोऽस्मि । अहो ! अयमाश्रमः अतिरमणीयः ।



तपस्विनी—( बालकं प्रति )—वत्स, त्यज सिंहशावकम्, अन्यथा सिंही कुपिता भविष्यति ।

बालकः—नाहं बिभेमि ।

तपस्विनी—त्यजेमम्, अहं त्वाम् एकं क्रीडनकं दास्यामि ।

( दुष्यन्तः बालकस्य साहसं दृष्ट्वा आकृष्टः समीपम् आगच्छति । )

तपस्विनी—आर्य ! भवानेव बालकमेनं निवारयतु ।

दुष्यन्तः—ऋषिकुमार ! कथम् पशुमिमं पीडयसि ?

तपस्विनी—नायं ऋषिकुमारः ।

दुष्यन्तः—तर्हि कोऽयम् ?

तपस्विनी—अयमेकस्य नृपस्य पुत्रः ।

दुष्यन्तः—कोऽसौनृपः ?

तपस्विनी—यः निरपराधां सतीमपि पत्नीं त्यक्तवान् नाहं तस्य नामापि गृह्णामि ।

( दुष्यन्तः परमां विकलतां नाटयति । अन्यतः एका ऋषिकुमारी क्रीडनकमादाय समागता । )

तपस्विनी—( ऋषिकुमारीं प्रति ) कुत्र शकुन्तला ?

बालकः—कुत्र मे अम्ब ?

(दुष्यन्तः अधुना विगतसंदेहः स्वपुत्रं परिज्ञाय बालकं क्रोडेकृत्वा चुम्बति । तपस्विनौ अपि तयोः आकृतिसाम्यं सविस्मयं पश्यतः । )

( ततः प्रविशति शकुन्तला दीनवेषा । )

दुष्यन्त :—( आत्मगतम् ) इयं सा मे शकुन्तला । ( उपसृत्य प्रकाशम् ) देवि क्षमस्व मे अपराधम् ।

( शकुन्तला साश्रुनयना पादयोः पतति । राजा च तथैव ताम् उत्थापयति । )

प्रश्नः—वाक्ये प्रयोगंकुरु :—

आश्रमः, साश्रुनयना, क्रीडनकम्, विकलतां, भारतम्, इन्द्रस्य ।

—:०:—

# ऊनविंशः पाठः



## विद्यामहिमा

विद्याधनं सर्वधनंप्रधानम् । विद्यां चौरः न चोरयति । विद्यां राजा न हरति । विद्या व्यये कृतेऽपिवर्धते । विद्यां कश्चित् परिजनः न विभजते । अतएव विद्याधनं सर्वश्रेष्ठम् ।

विद्याददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद् धनमाप्नोति धनाद् धर्मः ततः सुखम् ॥

विद्याविहीनस्य मनुष्यस्य जीवनं सर्वथा निरर्थकमेव । स नैव समाचारपत्रम् पठितुं समर्थः न च पत्र-व्यवहारं कर्तुं शक्नोति । अतः विद्याविहीनः नरः सर्वथा अन्धएव । अतएवोक्तम्—

'नास्ति विद्यासमं चक्षुः ।'

विद्वान् जनः सर्वत्रादरं प्राप्नोति, विदेशोऽपि तस्य स्वदेश एव ।

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥

अनेनापि विद्यायाः प्रभावः स्पष्टः ।

तथा च—

'मातेव रक्षति पितेव हितेनियुङ्क्ते,
कान्तेव चाभिरमयत्यपनीय खेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं
किं किं न साधयति कल्पलतेव विद्या ॥

प्रश्नः—(क) मातृभाषायां अर्थम् लिख—
विद्याददाति..........।
(ख) विद्या शब्दस्य रूपाणि लिख ।
(ग) कस्य जीवनं सदा निरर्थकम् ?
कः सर्वत्र पूज्यते ? स्वदेशे कः पूज्यते ?

—:०:—

# विंशः पाठः

## गणेशस्य मोदकप्राप्तिः

भगवतः शङ्करस्य पुत्रौ गणेश-कार्तिकेयौ परस्परं स्पर्धन्तौ सदैव मातापित्रोः परमानन्दकरौ आस्ताम् । एकदा विष्णुलोकात् कानिचित्-मोदकानि उपहारभूतानि प्राप्तानि । तौ द्वावपि गणेशकार्तिकेयौ तानि सर्वाणि मोदकानि प्राप्तुम्



उत्सुकौ अभवताम् । एवम् महान् विवादः समुत्पन्नः । तत्र च विवादे पिता कथितवान्—यः युवयोः संसारं परिक्रम्य प्रथमं समागमिष्यति स एव मोदकानामेषामधिकारी भविष्यति । तौ द्वावपि तदर्थ-

सुयतौ। कार्तिकेयस्तु मयूरमारूह्य शीघ्रमेव प्रयातः। परं गणेशः मूषिकवाहनः मन्दं मन्दं गच्छन् स्ववाहनस्य मन्दगतिं दृष्ट्वा परमं विषादं प्राप्तः। तदैव नारदस्य उपदेशात् स संसारस्य परिक्रमां विहाय मातापित्रोः परिक्रमां कृत्वा पितरे सर्वम् न्यवेदयत्। माता पितरौ च संसारपरिमितौ इति शास्त्रवचनम्। पिता तु तस्य



बुद्धिकुशलतां दृष्ट्वा परमं प्रीतः तस्मै मोदकानि प्रायच्छत्। पश्चात् संसारस्य परिक्रमां विधाय समागतः कुमारः कार्तिकेयः सर्वं दृष्ट्वा परमदुःखितः अभवत्।

प्रश्नः—कार्तिकेयौ किं प्राप्तुमुत्सुकौ अभवताम् ?

गणेशः कथं विषादं प्राप्तः ?

पिता कथं गणेशाय मोदकानि प्रायच्छत् ?

(ख) स्ववाक्ये प्रयोगं कुरू :—

तस्मै, दृष्ट्वा, अयच्छत्, पितरे ।




—:०:—

# एकविंशः पाठः

## कृषिः

पश्य, इमानि कृषिक्षेत्राणि । कृषिक्षेत्रेषु शस्यानि उत्पन्नानि भवन्ति । पश्य, एतेषु क्षेत्रेषु धान्यानि

फलभारनतानि सन्ति । तत्र च क्षेत्रेषु चणकाः गोधूमाः यवाश्च सघनाः अल्पप्ररोहा शोभन्ते । केषुचित् च क्षेत्रेषु आलूकम्, मूलिकाः अन्येचानेकशाकाः प्ररूढाः



सन्ति । विभिन्नेषु प्रदेशेषु फलानामपि कृषिः भवति ।

कृषिः सर्वेषां जीवनाधारः । कृषिं विना वयं भोजनं कथं प्राप्स्यामः ? कृषकाः कृषिं कुर्वन्ति । ते कृषिकर्म्मणि संलग्नाः कष्टमपि सहर्षं सहन्ते । ते ज्यैष्ठ्ये तापे तपन्ति । वर्षायां घोरासु अपि वृष्टिषु कार्य-लग्नाः तिष्ठन्ति । शीतकालेऽपि ते दिवानिशमश्रान्ताः

कृषिकर्म कुर्वन्ति रात्रौ च क्षेत्रं रक्षन्ति । तथापि कृषकानां दशा नास्ति सुखमयी । अस्माभिः तेषां



हिताय प्रयत्नकर्त्तव्यः । तेषु दयापि कर्त्तव्य वयमपि रिक्ते समये कृषिं करिष्यामः ।

प्रश्नाः—(क) वाक्यरचनां कुरु :—

क्षेत्रेषु, मुलिकाः, कृषकानाम्, कर्त्तव्यः, करिष्यामः ।

(ख) रिक्त स्थानानि पूरय—

ते—मासे तपन्ति ।

कृषिक्षेत्रेषु..........भवन्ति ।

वयमपि..........करिष्यामः ।

—:०:—

# द्वाविंशः पाठः

## ईशस्तुति

ध्येयं सदा परिभवघ्नमभीष्टदोहम्
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतम् ॥
वन्दे महापुरुष ते चरणारविन्दम् ॥१॥



ध्येयं सदा सवितृमण्डल मध्यवर्ती
नारायणः सरसिजासन सन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी ॥
हारी हिरण्मयवपुः धृतशंखचक्रः ॥२॥

इति

